# विश्व-संस्कृतम्

विश्वेश्वरानन्द-वैदिक-शोध-संस्थानस्य त्रैमासिक संस्कृत-पत्रम्

————————— अङ्कात्

पुनर्मुद्रितोंऽशः




विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्

होशिआरपुरम्—१४६ ०२१

ञ्चनदम्, भारतम् )

एकाङ्कम्—

# बृहद्रथपुष्यमित्रम्

प्रा० सुदर्शनशर्मणा विरचितम्
पञ्चापप्रदेशीय सर्वकारीय महाविद्यालये भटिण्डास्थले
संस्कृतविभागीयाध्यक्षेण

## पात्राणि

१. बृहद्रथः — अन्तिमो मौर्यसम्राट् ।
२. मित्रदेवः — मौर्यसम्राजः सचिवः ।
३. बाभ्रव्यः — बृहद्रथ काञ्चुकीयः ।
४. पुष्यमित्रः — मौर्यसम्राजः सेनानी ।
५. अग्निमित्रः — उपसेनाध्यक्षः पुष्यमित्रपुत्रः ।
६. विजया — बृहद्रथावरोधप्रतीहारी ।
७. भटः — पुष्यमित्रस्य प्रधानः सैनिकः ।

[ प्रज्ञादुर्वलञ्च वलदर्शन व्यपदेशदर्शिताशेष सैन्यः सेनानीः अनार्यो मौर्यं बृहद्रथं पिपेष पुष्यमित्रः स्वामिनम् । बाणभट्ट-कृते हर्षचरिते षष्ठे उच्छ्वासे । ]

## अथ प्रथमोऽङ्कः

बार्हस्पत्यार्थधर्माणं चाणक्यं प्रणमाम्यहम् ।
कौटिल्यात्कौटिलीयं यः प्रणिनाय निबन्धनम् ॥ १ ॥

[ नान्द्यन्ते ततः प्रविशति सूत्रधारः ]

सूत्रधारः—धारयन्त्यपि या सूत्रं ससूत्रं च मणिं तथा ।
नटी सा क्व गता जाने न दिङ्मूढो भ्रमाकुलः ॥ २ ॥

[ प्रविश्यापटीक्षेपेण नटी ]

नटी—नर्त्तयन्ती नटान् मूढान् लक्ष्मीर्लक्ष्मविभाविता ।
न जाने यात्यहो कुत्र राज्ञां मोहैकवर्धनी ॥ ३ ॥

सूत्रधारः—प्रिये !

[ नेपथ्ये कलकलः ]

[ निशम्य ]

आः को नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग पश्यामि । भवतु, ज्ञातम् ।

निःशक्तिसिद्धित्रयमोहमूढाः
षाड्गुण्ययुक्ता अपि रोषरक्ताः ।
प्राज्ञाः प्रजारञ्जनरिक्तभावाः
प्रारब्धकार्ये कृतिनः कथं स्युः ॥ ४ ॥

[ निष्क्रम्यापटीक्षेपेण पुनः प्रविश्य ]

पुंमां तु मित्रं ननु पुष्यमित्रः
प्रांशुश्च ना पौरुषपारदृश्वा ।
चन्द्रश्रिया स्मेरमुखश्च धीमान्
मौर्यान्तिमे राजनि दूनचेताः ॥ ५ ॥

सूत्रधारः—सत्यं बृहत्सुन्दररूपराये !
संरक्तरङ्गे ! रमणाभिरामे !
रागं विविच्यार्थविधिं विधाय
हृद्रागग्रामैकरतिं विवक्षि ॥ ६ ॥

बौद्धे मते स्वे विहितात्मचेताः
वैरे विधौ नैव धृतिप्रवीणः ।
दीनो हिते देशगते विरक्तो
वैराग्यरागैकरतो रसाढ्यः ॥ ७ ॥

नटी— संलक्षितं नाथ! विविच्य कर्म
सद्भर्तृसन्न्याससमत्वसिद्धौ ।
साध्यं भवेत्सौष्ठवसम्प्रपन्नम्
नागस्कृतां कर्म विधिं विधत्ते ॥ ८ ॥

गच्छामस्तावत्पुनर्दर्शनायनो चेदस्मद्विवक्षितं पुष्यमित्रेणैव श्रूयताम् । आवां पुनः बृहद्राजावरोधगतौ परिजनौ तत्रैव गत्वा स्वनियोगं साधयावः ।

[ निष्क्रान्तौ ]

## प्रस्तावना

[ ततः प्रविशति भटः ]

भटः—[ आत्मगतम् ]

"कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्" सिद्धान्तोऽयं सुतरां सापेक्ष एव नीतिविदाम् । महानासीदशोकः सम्राड्भूतो हि यो देशमिममेकच्छत्रसाम्राज्यीकृतं स्वदितामहाच्चन्द्रगुप्तात्पैतृकऋणदायरूपमाधाय चक्रवर्त्तिक्षेत्रपदवीमापादयत् परमहो विधेर्विलसितमिदं सर्वथैवाविषह्यावेदनं यत्कलिङ्गयुद्धप्रतिभयप्रभावितो हि सम्राट् सशोको जातः धर्मप्रतिपत्तिप्रतिपादनपेशलः मृदुदण्ड एवाजायत । पुत्रान् पौत्रांश्च स्वधर्मप्रसाराय प्रदेशेषु प्राहिणोत् । तीवरो नाम तस्य पुत्रः पितरि प्राणित्येव पञ्चत्वमापत् । जलौको नामापरः शैवमतावलम्बी काश्मीरेषु स्वातन्त्र्यमापेदे । कुणालश्चान्धीकृतः प्रशास्ता नैवाभवत् । संघसम्प्रदाये वदान्योऽशोको समर्प्य सम्प्रतिम् कुणालपुत्रम् संन्यासं स्वीचकार । परं दशरथो नामापरः पौत्रोऽशोकस्य प्रागेव सम्प्रतेः राज्यं शशासेत्यैतिह्यवादिनः प्रवदन्ति । परमेवं वादिनः केचिद्यद्दशरथः प्राचीं दिशं प्रतिपेदे सम्प्रतिश्च प्रतीचीम् । द्वैराज्यविभक्तं हि चक्रवर्त्तिक्षेत्रमिदं गृहकलहायितप्रायं सत् मौर्यराज्ये वैमनस्यं चकार । बृहद्रथश्च सम्राड्भूतोऽपि सभांगतोऽपि "बुद्धं शरणं गच्छामि धम्मं शरणं गच्छामि" इति वादानेव प्रवक्ति न तु सः केवलां नीतिं समश्नुते शौर्यं त्वस्येन्द्रिय बाह्यमेव ।

( परिक्रम्यावलोक्य च )

चिरायितोऽस्म्यनेन स्वगतेन विचारितेनाज्ञापितोऽभवं सेनापतिना पुष्यमित्रेण—'गच्छ भद्रमुख ! पश्य च क्वास्ते भद्रमुखो मौर्यसचिवो

मित्रदेवो विदर्भराज यज्ञसेनश्यालः ? मतोऽहं प्रत्यायितोऽस्मि यत्सः मधुमत्तभ्रमर इव पुष्पासवपानपेशलोऽन्तःपुरमध्यास्ते । "अहिंसा परमो धर्मः" इति प्रतीतिश्च तस्मै राज्यचिन्ता—लसमेव कृतवती । भवतु, गच्छामि तावत् सेनापतये निवेदयामि ।

[ निष्क्रान्तः ]

[ पटीक्षेपेण समागतो वृहद्रथः ]

वृहद्रथः—सेनापते ! विचार्यतां विमृश्यतां का गतिः स्थितिश्च वर्तते-ऽस्मद्राज्यसीमसु विधीयतामिदं यत्र कोऽपिमार्यते न कस्मैचित्किमपि दुःखं दीयते सौगतेन मार्गेण प्रजा प्रजा इव तन्त्रावापेन रक्ष्यन्ते । विदेशेषु सम्यक्प्रेषिताः दूताः प्रणिधयश्च प्रियदर्शि—धर्मप्रचाराय ।

पुष्यमित्रः—(प्रणम्य) जयतु महाराजः ।

वृहद्रथः—आयुष्मान्भव !

न्यस्तो भरो राज्यधुरो धुरीणे
जाताः प्रजाः धर्मविधौ प्रवीणाः ।
ये शत्रवः पूर्वजरोष रक्ताः
ते सर्वथा ध्वंसगतिं प्रपन्नाः ॥ ९ ॥

पुष्यमित्रः—(आत्मगतम्)—

व्यक्तं वृहद्वाक्यमिदं समिद्धम्
भूभारभर्ता च बृहद्रथोऽयम् ।
ये शत्रवः प्राकृतिकाः स्वभावात्
कोपैस्तु ते क्रौर्यगतिं नु रूढाः ॥ १० ॥

[प्रकाशम्] आर्य ! यथानिर्देशं गन्तास्मि मित्रदेवम् विलोकयितुं प्राप्तास्मि च तद्गतं वृत्तान्तं वर्णिलिङ्गिना यदविदितात्मभावोऽसौ विधे-विलसितात्कर्त्याण्यपेक्षी रमणीरमणरक्तः सुरापी सुरस्त्रीसार्थसंरक्त इव सुरसम्राट् सुरसदननिषादी निषधनाथो द्यूतव्यसनी न निवारयति दोष-दात्मानम् । सैन्यस्थितिसम्भावयिता चाहं यवनैरेवाक्रान्तप्रायां धरां धारयामि । पौरुषप्रतिपादनाय च नीतिनिष्णातैरमात्यैरेव धूरियं व्यपनीया ।

विदर्भराजश्च यज्ञसेनः धर्मयज्ञकर्म सव्यपेक्षी मित्रदेवद्रोहिभावं नैव चेतयन् स्वपौरुषेणैव पृथ्वीम् स्वायत्तीकर्तुमीहते। अतः कृतस्वपक्षपरपक्षोपग्रहो भवान् वदतु किम् क्रियताम् ? केनोपायेन जगतां धूरियं पुनरुज्जीव्यताम् ? चक्रवर्त्ति क्षेत्रमिदं म्लेच्छैराक्रान्तं सत् न पुनरपि निःश्वासलब्धिमवाप्स्यति। साञ्जलिबन्धं प्रार्थये यद्भवन्त एव भगवान्मनीषी महतां धर्मदेशी बौद्धदर्शन-दर्शी बौद्धव्यायाममाश्रित्य नीतिमिमामवधारयन्तु। मित्रदेवश्च मोहनिद्रा-विनिद्रापितः सहयोगमेवं ददातु विदेशि निर्देशसंयताः प्रजाः प्रतर्दकानां तर्दनैः ताडिताः तृषाकुलाः बुभुक्षिताश्च किं किमपि पापमाश्रित्य स्वोदर-पूरणाय बाधिताः न स्युः।

बृहद्रथः—(सकोपम्)—हम् ! आहूयतां सः लम्पटो मिथ्या श्रद्धालुश्च मित्रदेवो यो न वेत्ति विधिम् विक्रियावताम् विक्रान्ताः आक्रान्तारोऽपि सन्तस्ते भुव्यन्तरालेषु जनगणगुणदोषलब्ध प्रसराः इष्टि पशुमारण-शीलाः इष्टिपशुव्यपदेशदर्शन दोहलिनः द्रुग्धान् दोषेषु धर्षयित्वा दुराचारदौरात्म्यद्रुहिलाः सज्जना इव परिवेषपरिवारपरिधानपराः विश्वास्य विदुषः परिभाष्य शूरान् उत्क्षिप्य धीरान् परिवार्य वीरान् धराशायिनश्च कृत्वा धराधारकाः भवेयुः। विश्वसिमि सेनापते ! भवतां शौर्यं सम्पदि विश्वसिमि च प्रजासु तन्त्रावाप-विधिज्ञेऽमात्यवर्गे विश्वसिमि च भवन्त एव भूभारभरणभावनाः भगवत्सौगताशिषा स्वशिशून् दम्पतीवर्गान् तारयिष्यन्ति।

म्लेच्छैरुद्विज्यमाना भूर्धर्मकर्मैकशालिभिः।
रक्ष्यते त्रायते त्रासात् तर्ज्यमाना त्रिशङ्कुभिः॥ ११॥

पुष्यमित्रः—[स्वगतम्]—प्रशस्य उत्साहः समयगत एव परम् प्रभुमन्त्र-शक्तिभ्याम् विरहितो न जाने कथं प्रतीकारायालं भवेत्। भवतु, मनीषितायाहमुपायमेव प्रतीक्षे। कथं नामास्य मृदुदण्डो निवार्यताम्।

(प्रकाशम्)

जयतु देवः।

देवे क्षितौ त्रातरि कर्मदक्षे
धर्मप्रधानेऽथ सुमन्त्रशीले।
सौराज्य सद्भावयुते सुसभ्ये
वैराज्यविन्यासविधिः कथं स्यात्॥ १२॥

वृहद्रथः—

भावो भुवि ब्राह्मविधौ नदीष्णः
धर्ता वृहद्राज्यरसैकतन्त्रे ।
बार्हद्रथे राज्यरथे च सूतः
धीविक्रमैः कार्यधुराप्रणेता ॥ १३ ॥

[ प्रविश्य यवनिकामपार्याग्निमित्रः ]

अग्निमित्रः—जयतु महाराजः । (पुष्यमित्रं प्रति)

तात ! सेनापते ! प्रणमामि । मतोऽहमत्र भवता प्रहितो [मित्रदेवमाकारयितुम् । परमसौ तु,

मत्तः प्रमत्तः प्रमदाप्रसक्तः
आपानकैर्मंदलमोहमूढः ।
द्यूतेषु रक्तो विहितेशभावः
संसेवते नर्मरतिं निरीहः ॥ १४ ॥

व्याजं विभाव्यार्थकृतीषु दीनः
हीनश्च मोहेन मदं प्रपन्नः ।
प्रारिप्सित ध्वंसन धर्मकर्मा
कार्यान्वितिद्रोहविभावविद्भिः ॥ १५ ॥

(वृहद्रथं प्रति) आर्य !

अर्हो भवानर्हति धर्मकृत्ये
बुद्धस्य धर्मे च धृतिव्यपेक्षी ।
प्रज्ञानशीलश्च विधेर्विधातुः
विश्वास्यतावैभव वृत्तिवर्त्ती ॥ १६ ॥

सैन्यैः स्वकीयैर्ननु समिसक्ता
सौहार्दसद्भावगतौ विनीता ।
विद्यासु शस्त्रास्त्रगतासु रक्ता
त्यागेन योगेन समं विषक्ता ॥ १७ ॥

ते वैरिणः प्राकृतवृत्तिलीना
अन्तश्च बाह्यञ्च विभाव्य कोपम् ।
वैरस्यं वैरस्यविधिं विलोक्य
दुर्दैवविद्वेषदिशां नु दध्युः ॥ १८ ॥

[ इङ्गिताकाराभ्यामग्निमित्रं प्रति पुष्यमित्रः ]

सम्यगभिहितमायुष्मता ।

नाक्रामिता परैश्चक्रैः पृथ्वी पृथु प्रभाविता ।
पतिं प्रियेव सद्योषा रक्षिता परिरक्षति ॥ १९ ॥

[ ततः प्रविशति मित्रदेवः मधुमत्तभृङ्ग इव भ्रमरः ]

मित्रदेवः—जयतु जयतु महाराजो विजयतां सेनानीः पुष्यमित्रो विजयतामग्निमित्रश्चोपपृतनापतिः ।

बृहद्रथः—मित्रदेव !

शोच्योऽसि शौकैकनिधिं विविक्षुः
राज्ये च वैराज्यविधिं निनीषुः ।
आपानमत्तः प्रमदाप्रसक्तः
प्रावेपसे राज्यविधौ विरक्तः ॥ २० ॥

मित्रदेवः—प्रसीदतु महाराजः प्रसीदतु । मया तु भवतेव सर्वं एव राज्यभरः सेनापतौ निक्षिप्तः । भवतश्चाहिंसाव्रतमाश्रित्य हिंसा शीलोऽसिरपि मया कूपे निक्षिप्तः । बुद्धे बुद्धिं भक्तिं च बद्ध्वा भवन्तमुपेक्ष्य बुद्धे भगवत्येव भूतगणभीतिभञ्जने भृत्यत्वं भृतम् । बुद्धधम्मसंधानाम् प्रभावे सति का मात्रा यवनानां यत्ते देशमिमं स्वकीयं त्वदीयं भवदीयं तावकीनम् (इति मदावस्थायामेव प्रलपन् पदस्खलनञ्चाभिनयन्) हस्तेन का कथा पादेनापि द्रष्टुम् अक्ष्णा च मर्शयितुं शक्नुयुः । अत्र भवतां च पाद पुण्डरीकभ्रमरो भ्रमर इवाहं सकुसुमलताप्रकरी प्रकारान्तरपरिरम्भपेशलः चक्रवर्त्तित्व महिमानं गायामि ।

बृहद्रथः—( पुष्यमित्रं प्रति )— सेनापते ! भ्रमरोऽयं भ्रूविभ्रमभ्रष्टचेतनश्चर्चरीगानगृध्रुः पुण्डरीक कोशकल्पे कारागार एव बध्यताम् ।

पुष्यमित्रः—यदाज्ञापयति महाराजः (इति मित्रदेवम् शृङ्खलाबन्धम् बन्धयित्वा बन्धनागारे कारावासे स्थापयति) ।

अग्निमित्रः—(आत्मगतम्)— अर्धमवसितं कार्यस्य । बृहत्कण्टकमध्वनः संशोध्याधुना तदारोपकोऽप्युत्पाटनीयः । (प्रकाशम्) तात ! युक्तमेव मनीषितमत्र भवता । कण्टक शोधनमेव नीतेर्नियमः मृदुदण्ड-व्यवहारिणोऽमात्यस्य ।

पुष्यमित्रः—[बृहद्रथं प्रति]—जयतु महाराजः ! महाराज ! श्रूयतां महाभाग प्रमदाकृताः प्रमादास्तु सुविज्ञाता एवात्रभवता । महानसौ सम्राड-शोको भवतामेव पूर्वजः पद्मावतीमुपयेमे तस्माच्च कुणालापरनामानं धर्मविवर्धनं सुतं लेभेतिष्यरक्षिता चाग्रमहिषी सत्यपि कुणालपक्षि-समचक्षुषं कुणालम् सुतमपि कामयमाना सुतेन निराशिता कूटयोगेनैव तमन्धमकारयत् ।

बृहद्रथः—अलमलमतिमात्राम् गन्तुम् । इयानेव प्रसंगः श्रेयान् मे उत्साह-मालम्बयितुम् । सज्जीकृताः सन्नह्यन्ताम् पृतनाः । समदण्डो हि सम्राट् प्रजासु मात्स्यन्यायमपोहति मृदुदण्डो मात्स्यन्यायमुद्भावयति । तीक्ष्णदण्डश्च प्रजानामुद्वेजनीयः ।

यूनानदेश्याः विजिगीषुकास्ते
साकेत भूमौ प्रविसर्पमाणाः ।
रुद्ध्वा स्थले माध्यमिकां पुरीं ताम्
देश मदीयं ननु नाशयन्ति ॥ २१ ॥

देशो मदीयो ननु भारताख्यः
साङ्गं च वेदं ननु धारणाढ्यः
वैदेशिकैर्म्लेच्छजनैस्तु गीर्णः
द्रोह्यो भवेन्नैव विभिद्यमानः ॥ २२ ॥

व्यूह्यन्तां पृतनाः । द्रागेव ताः परीक्षितुमहमागन्ता मन्त्रोत्साह प्रभु शक्तिभिः सिद्धित्रयैक प्रभविष्णुः !

पुष्यमित्रः—यदाज्ञापयति सम्राट् । श्व एव व्युष्टेऽत्र भवान् सैन्यशक्तिम् परीक्षताम् ।

बृहद्रथः—सज्जाः स्मः ।

पुष्यमित्रः—[राजानमभिवाद्य निष्क्रान्तः साग्निमित्रः]

(यवनिकां संयम्य रङ्गशीर्षाद्रङ्गपीठमागत्याग्निमित्रं प्रति) वत्स! उपपृतनापतिर्भवानधुना देशहिताय प्रयस्यतो मे साह्यदानामालं भवतु। बन्दीकृतो मित्रदेवः कण्टकमेकं संशोधितम्। काल इदानी नः परीक्षायाः समायातः। क्षणिक एव प्रमादः कार्यविपत्तिमेवानयेत्। सफले मनोरथे प्राणत्राणम् अन्यथा मृत्युरेव ध्रुवः। पृतनाः पूर्णतया प्रभुपरिशीलनप्रतिकूलिताः। सर्वंकिञ्चित् सम्यक्संविहितम् शुकसारिकाभिः श्वभिरन्यैश्च पक्षिभिरश्रूयमाणमभ्यसनीयम्। यज्ञसेनप्रणिधिवर्गव्यवधानापोहनविधानाय सम्यगादिष्टाः पत्तयः, सादिनः वारणपतयः सर्वं एव समम् सचेतनीकृताः। सम्राट्समाजनसमये शस्त्रमेव साह्यं भवतः प्रयोगार्हम्। महानयं कालः परीक्षायाः कामदो भवेत्त्रासदो वा सर्वथैव नः पुरुषार्थप्रमाण एव।

दुर्दैवदोषैकदशाविषक्ताः
वैदेशिनो देशिषु लब्धरन्ध्राः।
सौभाग्यमायातु परा प्रतिज्ञा
स्वातन्त्र्यलक्ष्मीर्ननु रक्षिता स्यात्॥ २३॥

स्वातन्त्र्यमूला हि विनेतृसम्पत्
निन्द्यो विनेतुश्च विपद्विरोधः।
शौर्यानुरागी सुधियां प्रतीष्यः
निन्द्यः कुधीः क्रूरकृती निरस्यः॥ २४॥

नीतिं विहायार्थगतं न शौर्यम्
शौर्यं विनाऽर्थवती न नीतिः।
क्लैब्यं हि नीत्यैकरतिर्जगत्याम्
शौर्यैकवृत्तिश्च पशुक्रिया स्यात्॥ २५॥

सम्भाव्यते सैन्यरतस्तु सम्राट्
साम्राज्यसद्भावसमाश्रितश्चेत्।
क्षेमैकयोगे तु विरक्तचेताः
दण्ड्यो भवेद्दण्डविधौ विरक्तः॥ २६॥

स्पर्ध्या भवेद्वैदिक सम्प्रतीतिः
　　निर्वैदिकीयैर्नहि　वर्त्तनीया ।
नीतिर्निरीतिर्ननु　माननीया
　　विश्वस्य　धर्मैर्निरपेक्षभावात् ॥ २७ ॥

बुद्धे श्रियं चैव धियं दधानः
　　यः सेवते श्रान्तमनाः विरक्तिम् ।
सः धर्मलिङ्गी नहि वर्णिलिङ्गी
　　वर्णाधमः　कर्त्तनदण्डयोग्यः ॥ २८ ॥

[ पुनरपि परावृत्य ]

पुष्यमित्रः—साधु वत्स ! साधु ! अवश्या ते सत्त्वबुद्धिस्तत्त्वबुद्धिरिदानीं परीक्ष्यते ।

जातिस्तु सा जन्मवतां जघन्या
　　संशीर्यते　जीर्णविधिं　जुषाणा ।
उत्साहबुद्धिञ्च　विधाय　देही
　　दुर्दम्यता　भावगतो　न　जेयः ॥ २९ ॥

भवत्विदानीमेतावत् । गच्छावः । पुनर्दर्शनाय । महाकालः सर्वं सम्पन्नमेव कुर्यात् ।

अग्निमित्रः—यथाहात्रभवान् । (उभावेव निष्क्रान्तौ)

[ हर्म्यादवतरन् प्रातरेव बृहद्रथः ]

बृहद्रथः—विजये ! त्वर्यतां बाभ्रव्यो ज्ञायतां च तावत्तेन सज्जितो रथो न वेति ।

[ निर्गत्य पुनः प्रविश्य प्रतीहारी ]

विजया—जयतु सम्राट् ! सज्जो रथो भवतश्चरणन्यासमपेक्षते । अवतरतु महाराजः समीहितसिद्धये ।

[ प्रविश्य ]

बाभ्रव्यः—जयतु महाराजः । सज्जो रथो भवतां चरणन्यासमपेक्षते । त्वरतां भवान् समीहितसिद्धये ।

बृहद्रथः—नमः सिद्धेभ्यः नमश्च सौगताय नमोऽस्तु सौमताय धर्माय च ।

संसत्सु संगताः सन्तः
सुखं यान्तु निरामयाः ।
"अहिंसा परमो धर्मः"
सत्यमिदं प्रवर्त्तताम् ॥ ३० ॥

सन्तु सर्वाः प्रजाः शान्ताः निस्तन्द्राश्च निरीतयः ।
कोपैर्मुक्ताश्च ताः सन्तु तन्द्रावापविलक्षणाः ॥ ३१ ॥

औत्सुक्यमात्रां परिधाय तावत्
प्राकम्पतासौ प्रविसर्पमाणः ।
प्रस्खालितश्चैव पदैक भङ्गात्
स्विन्नश्च खिन्नश्च पपात भूमौ ॥ ३२ ॥

उत्तम्भितो मोहनतश्च धीमान्
तेजोविशेषैकधृतिं दधानः ।
आसीदनाविष्कृतधैर्यसारः
आलानितः सामजकालकीटः ॥ ३३ ॥

[ संज्ञां लब्ध्वा पुनरपि पादयोरुत्थाय ]

[ प्रकाशम् ]

बाभ्रव्य ! गच्छतु भवान् अवरोध विधानाय । सैन्यमवेक्ष्यागन्तैव शीघ्रम् ।

बाभ्रव्यः—यदाज्ञापयति महाराजः । [परिक्रम्य सोपानात्सोपानमारुह्या-त्तगतम्] ।

कष्टा हि सेवा ननु राजकीया
कष्टश्च तावत्खलु भृत्यभावः ।
दारिद्रयकष्टं ननुः दुःख युक्तं
स्त्रीदासता कष्टकरी जगत्याम् ॥ ३४ ॥

दण्डस्तु मे वार्द्धक आगतोऽयम्
दण्डः प्रभोर्ज्ञातनिधि प्रतीतः ।
तीक्ष्णो मृदुश्चैव गतेऽथ काले
युक्तः प्रयोज्यश्च यथार्हभावः ॥ ३५ ॥

द्विषां विघाताय विधातुमिच्छन्
क्लीवो नरो धर्मविमूढचेताः।
हिंसामपास्याहितमार्दवो हि
संज्ञाप्यते लाघवभावदीनः॥ ३६ ॥

[ दुर्निमित्तमावेक्ष्य ]

[ प्रकाशम् ]

सव्यं बृहत्स्पन्दन कर्म दक्षम्
नेत्रं मदीयं वदतीह शोकम्।
सम्राट्प्रयातः स्खलितश्च मोहात्
आगश्च किं तेन कृतं क्व काले॥ ३७ ॥

[ नेपथ्ये कलकलः ]

कृपाणिका कृत्तग्रीवो हतो नृपः।
कृपाणिका कृत्तग्रीवो हतो नृपः।
कृपाणिका कृत्तग्रीवो हतो नृपः।

[ अन्तःपुरेऽपि करुणाक्रन्दः ]

कृपाणिका कृत्तग्रीवो हतो नृपः।

[ दूराध्वनि चारणगणनादः ]

## [ भरतवाक्यम् ]

मौर्ये हते राजनि कृत्तशीर्षे
वैराज्यराज्ये गतिगर्त्तलीने।
शौङ्गोऽभिनेता नृवरश्च नेता
सौभाग्यमादाय धरां प्रशास्तु॥ ३८ ॥

[ निष्क्रान्ताः सर्वे ]

# विश्व-संस्कृतम्

नाम

विश्वेश्वरानन्द-वैदिक-शोध-संस्थानस्य
त्रैमासिकं संस्कृत-पत्रम्

संस्थापक-सम्पादकः

स्व० डा. विश्वबन्धुः, एम्. ए., शास्त्री., एम्. ओ. एल्., डी. लिट्.

सम्पादकः

प्रा० वेदप्रकाशः, विद्यावाचस्पतिः, शास्त्री, एम्० ए०, एम्० ओ० एल्०,

सह-सम्पादकः

प्रा. इन्द्रदत्त उनियालः, एम्.ए., साहित्याचार्यः, सांख्ययोगाचार्यः, साहित्यरत्न



प्रकाशकः

श्री देवदत्तः, शास्त्री, विद्याभास्करः, साधु-आश्रमः, होशिआरपुरम्

---

*Printed & Publisher by* :

Shri Dev Datta Shastri *at* V.V.R.I. Press,

Vishveshvaranand Vedic Research I

P. O. Sadhu Ashram, Hoshiarpur—146

(*Punjab, India*)